श्यक्रिया विच्छिन्नश्रौताग्नेर्मृतौ तु प्रेताधानं तत्रैवोक्तम् प्रेतस्याग्न्याउयेक्षितामथिताग्न्यानलेरणी सन्निधा
गोमंथेत्यस्येति यजुषाननः यस्याग्नयोनुकृता मासकामाः संकल्पयंते यजमानमासं आयंतु ते हविषे सादिनायस्वं
लोकमिममेतंनयंत्विति मंत्रः शणीयपावकंतूष्णीं द्वादशोपात्तसर्पिषा तूष्णीं हुत्वा ततः कुर्यात्प्रेतेमासादिनिक्रियां न
दे चाग्न्यथारण्योर्नाशे स्वामी म्रियेतन्चेत् आहरेदरणी इद्धे मनो ज्योतिर्जुषतामिति ततः यज्ञपार्श्वैः यजमाने चितारूढे या
न्यासे कृते सति वर्षाद्यभिहते वन्हौ कथं कुर्वीतयाज्ञिकाः नदर्धदग्धकाष्ठेन मंथनं तत्र कारयेत् तच्छेषालाभतोन्येन
दग्धशेषेणयत्पुनः हुत्वाज्यं लौकिके वन्हौ हुतशेषं दहेत्तुवा अत्राग्निषु सत्कूपर्णशरैः शरीरोत्पत्तिः शरीराभावे सति प्रेता
धानेनाग्न्युत्पत्तिः उभयाभावे तु प्रेताधाने नाधिकारा ह्याहादिसंस्कारलोपः उदकदानादेव कार्यमिति केशवीकारश
योमनुस्वाः तन्न निषेकाद्याः श्मशानांतास्तेषां वै मंत्रतः क्रिया इति विरोधात् क्रियालोपगतायेचेति निषेधात्तदभावे पला
शानां वृंतैः कार्यः पुमानपीत्यभावे विधानस्याग्न्यभावेपि साम्याच्च तेन प्रेताहुत्यभावेपि स्त्विष्टकृद्ध्यानरोक्तेरहृशार्थला
त् प्रेताधानं दाहोपि भवस्येव प्रतिकृतेरग्नीनां च प्रेताधानप्रयोजकत्वात्तत्ते; पत्न्या अप्येवम् दाहयित्वाग्निहोत्रेण स्त्रि
यं वृत्तवतीं पतिरिति याज्ञवल्क्योक्तेः यत्तु द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः जीवंत्यां प्रथमायां तु सुरापानस
मं स्मृतमिति तदाधाने सहानधिकृताविषयमिति विज्ञानेश्वरः मदनरत्ने त्वाहोपि आहिताग्न्योश्च दंपत्योर्यस्त्वादौ म्रियते
भुवि तस्य देहः सपिंडैश्च दग्धव्यस्त्रिभिरग्निभिः पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना अनाहिताग्निदेहस्तु
स्योगृह्याग्निना द्विजैः त्रिकांडमंडनस्तु विकल्पमाह ज्येष्ठायां विद्यमानायां द्वितीयायै स्वयोषित कार्याग्नित्याग्निहोत्रं

यानकथंचित्प्रयच्छति स्त्रीमात्रमविशेषेणदग्ध्वान्यैर्वैदिकादिभिः विशेषादथतेयह्याधानमेवास्तिनेद्धधूरिति अन्येदंत-
त्वं साग्नेःपत्नीमृतो होपक्षोपुनर्विवाहे छायांपूर्वाग्निभिर्दहेदित्येकःपक्षः भार्यायैपूर्वसारिण्यैदत्वाग्नीनंत्यकर्मणि पुन
र्दारक्रियांकुर्यात्पुनराधानमेवचेतिमनूक्तेः दाहयित्वाग्निहोत्रेणस्त्रियंवृत्तवतीपतिरितियाज्ञवल्क्योक्तेश्च पुनर्विवा
हाशक्तोनिर्मंथ्येनतांदग्ध्वापूर्वाग्निथेवाग्निहोत्रेष्ट्यादिकार्यमित्यर्थः आहार्येणाहिताग्निपत्नीचेत्याश्वलायनोक्तेः भरद्वा-
जोपि निर्मंथ्येनपत्नीमिति पूर्वाग्न्येकदेशेनदहेदितियज्ञपार्श्वदेवयाज्ञिकादयः यानिचतस्मादपत्नीकोप्यग्निहोत्रमाहरे
दितिश्रुतिःविष्णुः छंदोगपरिशिष्टंच मृतायामपिभार्यायांलौकिकाग्निंनहित्यजेत् उपाधिनापितत्कर्मयावज्जीवंसमाचरे
त् उपाधिर्हेमकुशापत्न्यादिः अन्येकुशमयींपत्नींकृत्वातुगृहमेधिनः आग्निहोत्रमुपासंतेयावज्जीवमनुव्रताइत्यपरार्केस्मृ
त्यंतरात् कात्यायनोपि रामोपिकृत्वासौवर्णींसीतांपत्नींयशस्विनीम् ईजेबहुविधैर्यज्ञैः सहभ्रातृभिरच्युत इत्यादीनिता
निपूर्वाग्निधेवाग्निहोत्रादिपराणिनत्वपत्नीकस्याधानार्थानि क्रतुविधीनामाधानाप्रयोजकत्वात् अपत्नीकस्याधानाप्रवृ-
त्तिरितिमानवपरिशिष्टाच्च सोमेनभवत्येव अपत्नीकोप्यसोमपइतिश्रुतेः यत्तुभरद्वाजापस्तंबसूत्रम् दारकर्मणियद्यश
क्तआत्मार्थमग्न्याधेयमिति अस्यार्थः पुनर्विवाहाशक्तोयदन्याधेयंपूर्वंकृतमस्तितदात्मार्थमेव नपत्न्यैदद्यादिति ब्राह्मण
भाष्यापरार्कोशार्करामांडारादित्तत्वमप्येवम् त्रिकांडमंडनस्तुपक्षद्वयमाह अन्येप्यपत्नीकस्याधानमाहुस्तदाशयंनविद्मः
वृद्धयाज्ञवल्क्यः आहिताग्निर्यथान्यायंदग्धव्यस्त्रिभिरग्निभिः अनाहिताग्निरेकेन लौकिकेनापरोजनः क्रतुः एवंवृत्तां-
सवर्णांस्त्रींद्विजातिःपूर्वमारिणीम् दाहयेदग्निहोत्रेणयज्ञपात्रैश्चधर्मवित् कारिकायाम् पत्नीमपिदहेदेवंभर्तुःपूर्वमृता-

यदि अनग्निकं दहेदेवं कपालेन हविर्भुजा आशौचप्रकाशोक्तः विधुरं विधवां नैव कपालस्थाग्निना दहेत् ब्रह्मचारिणं यतिं
नैव दहेदुत्तपनाग्निना तु पाग्निना च दग्धव्यः कन्यका बाल एव च अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत् करीषादित-
तो वन्हिर्जातो यः स कपालजः अनुपनीते यद्यपि जातारण्यग्निः कैश्चिदुक्तस्तथापि तस्य कलौ निषिद्धत्वोक्तेरयमेव ज्ञेयः स्मृ-
त्यंतरे गृहस्थो ब्रह्मचारी च विधुरो विधवाः स्त्रियः औपासनश्चोत्तपनस्तृषाग्निस्तु कपालजः उत्तपनस्तु दर्भाग्रेग्निं तु
प्रज्वाल्य पुनर्दर्भैस्तु संयुतः पुनर्दर्भैस्त्रितीयेग्निरेष उत्तपनः स्मृतः यमः यस्यानयति शूद्रोग्निं तृणकाष्ठहवींषि च प्रे-
तत्वं च सदा तस्य स चाधर्मेण लिप्यते देवलः चंडालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् पतिताग्निश्चिताग्निश्च न
शिष्टग्रहणोचितः मनुः दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः अत्र प्रातिलोम्ये-
न क्रमः पूर्वमुखस्तु नेतव्यो ब्राह्मणो बांधवैर्गृहात् उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा दक्षिणाभिमुखः शू-
द्रो निर्हर्तव्यः स्वबांधवैरित्यादि पुराणादित्यपरार्कः तेन त्रिंशच्छ्लोक्युक्तोनुलोमक्रमो हेयः आश्वलायनः ज्येष्ठप्रथमाः
कनिष्ठजघन्याः गच्छेयुः आधानोत्तरं द्वितीयविवाहे कृते यजमानमरणे श्रौतस्मार्ताग्न्योः संसर्गः बौधायनसूत्रे अथ यथा
हिताग्निर्द्विभार्यो विंदेत प्राक् संयोगान्नीयेनौपासनं संपरिस्तीर्याज्यं विलाप्य चतुर्गृहीतं गृहीत्वा समिधस्यग्नौ जुहोति सं-
मितं संकल्पयेथामिति मिंदाहुती व्याहृतीश्च हुत्वाथैतमग्निमथंते योनिर्ऋत्विय इति समिधि समारोप्य गार्हपत्ये समिध-
मभ्यादधाति भवतं नः समनसाविति गार्हपत्य आज्यं विलाप्य चतुर्गृहीतं गार्हपत्ये जुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यपरं
चतुर्गृहीत्वा नितिः स्रुगानसयह जुहोत्यथ गार्हपत्ये स्रुवाहुतीर्जुहोति ब्राह्मण एकहोतेति दशभिरथ प्राचीनावीत्यन्वाहार्य

ग्नेजुहोतियेसमानायेसजातादतिद्वाभ्यामथतत्रैवस्रुवाहुतिंजुहोत्यग्नयेकव्यवाहनायस्विष्टकृतेस्वधानमःस्वाहेत्यथयज्ञो-
पवीतीद्वादशगृहीतेनस्रुचंपूरयित्वापुरुषसूक्तेनाहवनीयेजुहोत्यथस्रुवाहुतीर्जुहोत्यग्नयेविविचयेस्वाहाग्नयेव्रतपतयेग्न
येपवमानायाग्नयेपावकायाग्नयेशुचयेस्वाहाग्नयेपथिकृतेस्वाहाग्नयेऽनुमतयेग्नयेवैश्वानरायेत्यथचतुर्गृहीतंजुहोति-
मनोज्योतिरित्यतऊर्ध्वंपित्र्यंकर्मप्रतिपद्यतेइति आहिताग्नेर्विदेशमृतेपथिकृतीष्टिर्भूताग्निहोत्रंतद्दाहः पात्रयोजनंच क
ल्पसूत्रादिभ्योस्मासिताग्रहकृतपद्धतेश्चज्ञेयमितिचहुवक्तव्येप्युपरम्यते स्मार्ताग्निसूत्रंमदनरत्नेछंदोगपरिशिष्टेच दुर्व
लंस्नापयित्वानुशतद्वैचेलाभिसंवृतम् दक्षिणाशिरसंभूमौबर्हिष्मत्यांनिवेशयेत् घृतेनाभ्यक्तमाप्लाव्यसवस्त्रमुपवीति
नम् चंदनोक्षितसर्वांगंसुमनोभिर्विभूषयेत् हिरण्यशकलान्यस्यक्षिप्त्वाछिद्रेषुसप्तसु मुखेष्वथापिधायैनंनिर्हरेयुःसुता
द्यः आमपात्रेग्निमादायप्रेतमग्निपुरःसरम् एकोनुगच्छेत्तस्यार्धमर्धपथ्युत्सृजेद्भुवि ऊर्ध्वमादहनंकार्यमासीनोदक्षिणा
मुखः सव्यंजान्वाच्यशनकैःसतिलंपिंडदानवत् अथपुत्रादिराप्लुत्यकुर्याद्दारुचयंमहत् तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसं-
मुखे आज्यपूर्णांस्रुचंदद्याद्दक्षिणाग्रांनासिकेच पादयोरधरांप्राचीमरणीमुरसीतराम् पार्श्वयोःशूर्पंचमसौसव्यदक्षिण
योःक्रमात् मुसलेन्यसेन्मुब्जमन्तरूर्वोरुलूखलम् चात्रोविलीवमत्रेवअग्नयेरप्ययंविधिः अपसव्येनकृत्वेतद्वाग्य
तःपितृदिङ्मुखः अथाग्निंसव्यमारभ्यदद्याद्दक्षिणतःशनैः अस्मात्त्वमधिजातोसित्वदयंजायतांपुनः असौस्वर्गाय
लोकायस्वाहेतिपरिकीर्तयेत् तथा एवमेवाहिताग्नेश्चपात्रन्यासादिकंभवेत् कृष्णाजिनादिकंचात्रविशेषोध्वर्युचोदितः
त्रेव अनग्नेर्वाहिताग्नेरीदृग्भ्योवाप्यवस्थिता अग्निप्रदानमंत्रोस्यानग्नयोप्यदग्निसंस्थिताः इदं छंदोगानामेव पात्रन्यासो

कैरुत्तानदेहस्वंशाग्निपरम् निरग्निस्तुपुमानधोमुखः स्त्रीतूत्तानादात्या सगोत्रजैर्गृहीत्वातुचितामारोप्यतेशवः अ-
धोमुखोदक्षिणादिक् चरणस्तुपुमानिति उत्तानदेहानारीतुसपिंडैरपिबंधुभिरित्यादिपुराणादितिशङ्कितव्य
तादयः उत्तरशिरस्त्वंसामगेतरपरं वाराहेत्वग्निदानेन्योमंत्रः कृत्वातुदुष्कृतंकर्मजानतावाप्यजानता मृत्युका-
लवशंप्राप्यनरंपंचत्वमागतम् धर्माधर्मसमायुक्तंलोभमोहसमावृतम् दहेयंसर्वगात्राणिदिव्यान्लोकान्सग-
च्छतु ज्वलमानंमहावन्हिंशिरस्थानेप्रदापयेत् चतुर्वर्णेषुसंस्थानमेवंभवतिपुत्रके अभक्रियानिबंधेगारुडे
षट्पिंडदानमुक्तम् मृतस्योत्क्रांतिसमयेषट्पिंडान्क्रमशोददेत् मृतिस्थानेतथाद्वारिचत्वरेतार्क्ष्यकारणात् वि
श्रामेकाष्ठचयनेतथासंचयनेचषट् तथा आदौदेयास्तुषट्पिंडादशदेयादशाहिकाः स्थानेचार्धपथेतीतेचि
तायांशवहस्तके स्मशानवासिभूतेभ्यः षष्ठंसंचयनेतथा ततः संभूतकृज्जगद्योनेस्त्वंलोकपरिपालकः उक्तः
संहारकस्तस्मादेनंस्वर्गंमृतंनयेत्याग्निंदत्वाऽस्मात्त्वामितिमंत्रेणार्धदग्धेआज्याहुतिरुक्ता आहिताग्नोपराशरः श-
म्यांशिश्नेविनिक्षिप्यअरणीमुष्कयोरपि जुहूंचदक्षिणेहस्तेवामेतूपभृतंन्यसेत् शिश्नेतूलूखलंदद्यात्पृष्ठेचमु-
सलंन्यसेत् उरसिक्षिप्यदृषदंतंडुलाज्यतिलान्मुखे श्रोत्रेचप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः कर्णेनेत्रेमुखे
घ्राणेहिरण्यशकलंन्यसेत् अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत् प्रचेताः स्नानंप्रेतस्यपुत्राद्यैर्वस्त्राद्यैःपूजनं
ततः नग्नदेहंदहन्नैवकिंचिद्देयंपरित्यजेत् यमः प्रेतंदहेच्छुभैर्गंधैःस्नपितंस्रग्विभूषितम् आश्वलायन
सूत्रे संस्थितेप्रेतालंकारान्कुर्वंतिकेशश्मश्रुलोमनखानिवापयंतिनलदेनानुलिंपंतिनलदमालांप्रतिमुंचंतीति

माधवीयेश्राद्धे दरिद्रोपिनदग्धव्योनग्नः कस्यांचिदापदि तथा निःशेषस्तु नदग्धव्यः शेषंकिंचित्यजेन्नरः दाहकालेग्नि नाशेतु मदनरत्नेयज्ञपार्श्वः यजमानेमृतेक्वापि चितादीचाप्रवेशिते वर्षाद्याभिहतेग्नौतु कथंप्रेतविकल्पना शेषंदग्धा प्रदग्धेषु निर्मथ्यैवतु कारयेत् अथपर्णशरादिदाहेनाग्निनाशेपश्चात्तद्देहलाभेमदनरत्ने श्राद्धे अथपर्णशरेदग्धेपा त्रन्यासेकृतेसति गतेथाग्निपुत्तद्देहोयद्यूर्ध्वंलभ्यतेक्वचित् तदार्धदग्धकाष्ठानितानिनिर्मथ्यतंदहेत् यद्यर्धदग्धका ष्ठंतुतदीयंवैनलभ्यते तदानदस्थिखंडंतुनिक्षेप्तव्यंमहाजलइति दंपत्योरेकदामृतौविशेषमाहापस्तंबः तथैवमेले संहेवपितृमेधोहिवचनलिंगान्मंत्रान्संधारयंति पितृमेधोदाहांतंकर्म दाहांतमेकतंत्रत्वमिति बौधायनोक्तेः आस्थि संचयनमप्येकंउदकपिंडदानादिपृथगेव सहगमनेप्येवम् तदाहमदनरत्ने भाष्यार्थसंग्रहकारः एककालमृ तौभार्याभर्ताचयदिवैद्वयोः तंत्रेणदहनंकुर्यात्पिंडःश्राद्धंपृथक्पृथक् एककालेमृतौजायापतीयदितदा पितुः विभज्याग्निंक्रियांकुर्यादितियत्तदसांप्रतम् दाहांतमेकतंत्रत्वमितियाज्ञिकसंमतम् मृतंपतिमनुव्रज्ययानारीज्व लनंगता अस्थिसंचयनांतोस्याभर्तुःसंस्कारएवहि कीकसानांतुसंस्कारोन्यायासिद्धोपिनोभवेत् एककालेमृतेप्येवं कीकसानांविधिःस्मृतः नवश्राद्धंसपिंडांतंभिन्नकालमृतौयथा कपर्दिकारिकापि मृतेभर्तरितद्दाहात्प्राक्पत्नी म्रियतेयदि पत्यांवाप्राक्प्रमीतायांदाहादर्वाक्पतिर्मृतः तत्रतंत्रेणदाहःस्यात्मंत्रेषुद्विलमूह्यते कीकसानांतुसंस्का रः पृथगेवतयोर्भवेत् एकाहमृत्योर्युगपन्नवश्राद्धादिकंतयोः मृतंपतिमनुव्रज्यपत्नीचेदनलंगता तत्रापिदा हस्तंत्रेणपृथगस्थिक्रियाभवेत् अस्थिसंचयनपृथक्त्वेविकल्पः सहगमनेसर्वत्रपाकेप्याहप्रचेताः एकचि-

त्यांसमारूढो मीयेतेदंपतीयदि तंत्रेणश्रपणंकुर्यात्पृथक्पिंडंसमाचरेत् अथोदकदानंवसिष्ठः शरीरमग्नौसंयोज्य
नचेक्षमाणाअपोभ्यवयंतिसव्योत्तराभ्यांपाणिभ्यामुदकक्रियांकुर्वंत्ययुग्मम् आपस्तंबः मातुश्चयोनिसंबंधेभ्यः
पितुश्चासप्तमात्पुरुषाद्यावतांवासंबंधोज्ञायतेतेषांप्रेतेष्वुदकक्रियेति याज्ञवल्क्यः सप्तमाद्दशमाद्वापिज्ञातयो-
भ्युपयंत्यपः अपनःशोशुचदघमनेनपितृदिङ्मुखाः सकृत्प्रसिंचंत्युदकंनामगोत्रेणवाग्यताः सप्तमाद्दशमा
द्वादिवसादानदंतमिति विज्ञानेश्वरः कनीयांस्तुसप्तमाद्दशमाद्वापुरुषादित्याहुः सप्तमाद्दशमाद्वापुरुषात्समान
ग्रामवासेयावत्संबंधमनुस्मरेयुरितिपारस्करोक्तेः मंत्रस्नानांगमेवेतिहेमाद्रिः प्रचेताः प्रेतस्यबांधवायथाहेमुद
कमवतीर्यनोद्वर्षयेयुरुदकांतेप्रसिंचेयुरपसव्ययज्ञोपवीतवाससोदक्षिणामुखाब्राह्मणस्योदङ्मुखाप्राङ्मु
राजन्यवैश्ययोः सएवनदीकूलंततोगत्वेत्युक्त्वासचैलस्ततःस्नात्वाशुचिःप्रयतमानसः पाषाणंततआदायविप्रे-
दद्याद्दशांजलीन् द्वादशक्षत्रियेदद्यात्वैश्येपंचदशस्मृताः त्रिंशच्छूद्रायदातव्यास्ततस्तुप्रविशेद्गृहम् ततःस्नानंपु
नःकार्यंगृहशौचंचकारयेत् प्रेतस्नानेविशेषः शाण्डिल्ये आदिपुराणे आदौवस्त्रंचप्रक्षाल्यतेनैवाच्छादितस्त
तः कर्तव्यंतैःसचैलंतुस्नानंसर्वमलापहम् पूर्वपरिहितंवस्त्रंप्रक्षाल्यपुनःपरिधायस्नायादित्यर्थः अपनइतिमंत्रे
णवामहस्तानामिकयाजलालोडनम् अवतरणेरुद्रपुरःसरत्वोक्तेर्यथाबालंपुरस्कृत्येतिबोधायनीयंजलादुत्थानपर
मितिहारलतादयः आश्वलायनः सव्यावृतोव्रजंत्यनीक्षमाणायत्रोदकमवहद्भवतितत्प्राप्यसकृदुन्मज्ज्यैकांजलि
मुत्सृज्यंतस्यगोत्रंनामगृहीत्वेति प्रचेतसान्वहमंजलित्रयमप्युक्तंत्रिःप्रसेकंकुर्युः प्रेतस्तृप्यत्विति तथा दिनेदिनेंज

लीन्पूर्णान्प्रदद्यात्सेन कारणात् तावद्दिद्भि कर्तव्या यावत्पिंडः समाप्यते एकाहाद्विस्विकहार्दिर्वेत्यर्थः मदनरत्ने भरद्वाजः गृह्येतु द्विकहद्विरघ्नु
ना आशौचांते प्रदद्यात्तु भेतपुत्रस्तिलांजलीन् प्रथमेन्हि सकृद्दद्यात्पिंड यज्ञात्तता दिवा त्रीन्प्रदद्यात् द्वितीयेन्हि तृतीये पंच एव च चतुर्थे सप्त
संख्यांस्तु पंचमे नवचोत्सृजेत् षष्ठेन्हि वैकादशकाः सप्तमेतु त्रयोदश अष्टमे पंचदशकान्नवमे दशसप्त च एकोनविंशतिं चान्ये श
तांजलिमतं स्मृतम् केचिद्दशांजलीन्प्राहुः केचिदाहुः शतांजलीन् पंचपंचाशतं चान्ये स्वशाखोक्तव्यवस्थया छंदोगपरिशिष्टे अथा
नवेक्षयेत्वापः सर्वे चैव शवस्पृशः गोत्रनामपदांते तु नर्पयामीत्यनंतरम् दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक् पृथक् विष्णुपुराणे स
पिंडीकरणं यावदृजुदर्भैः पितृक्रिया सपिंडीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् रामायणे इदं पुरुषशार्दूल विमलं दिव्यमक्षयम् पि
तृलोकेषु पानीयं मद्दत्तमुपतिष्ठताम् दानवाक्ये विकल्पः याज्ञवल्क्यः कामोदकं सखिप्रत्तास्वस्रीय श्वशुरर्त्विजाम् काम इच्छा
प्रेतनृसीच्छायां देयमन्यथा नेत्यर्थः शंखपारस्करौ आचार्ये चैवम् मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषामिति द्विव
चनात् गातामह्या अपि शंखलिखितौ उदकक्रिया श्वश्रू श्वशुर मातुलयोः शिष्ये सहाध्यायिनि राजनि चेति इन्द्रमत्तुः स्त्री धा
धानोदकं कुर्युस्तेनाप्यत्याविधर्मिणः गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः याज्ञवल्क्यः नब्रह्मचारिणः कुर्युरुदकं पतितास्तथा
षडशीतौ स्वीयाचारादपि भ्रष्टाः पतिता ये च दूषिताः नकुर्युरुदकं तेवै तेभ्योप्यन्ये न नैव हि मदनरत्ने हारीतः पतितामपहृतानां
चरंतीनां च कामतः प्रत्तानां चैव कन्यानां निवर्त्यो सलिलक्रिया अपरार्के शंखलिखितौ अपपात्रितस्य रिक्थपिंडोदकानि व्यावर्तं
ते अपपात्रितः कृतघटस्फोटः तस्यापि संग्रहविधौ कृते आशौचोदकाहिकुर्यादित्याशौचप्रकाशः अथाशौचे नियमाः याज्ञव
ल्क्यः इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः विदश्य निंबपत्राणि नियता द्वारि वेश्मनः आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्

कृत्ये आदित्यपुराणे आशौचमध्ये यत्नेन भोजयेच्च सगोत्रजान् अंत्यादिने तु मदनरत्ने प्राह्ले यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः स तत्र गृह
शुद्धिं च वस्त्रशुद्धिं करोत्यपि अंत्यकर्मकालीनवस्त्रयोस्तु तत्रैवोक्तम् ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टं तु वासभिः अंत्यानामाश्रितानां च त्य
क्त्वा स्नानं करोत्यथेति शंखः दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च प्रेतपिंडक्रियावर्ज्यमाशौचे विनिवर्तते काठकगृह्ये यत्र प्राणोत्क्र
मस्तत्रान्त्यहं महाबलिं कुर्यादिति पारस्करः तदानीमेव वस्त्रं तंडुलं दीपं कांस्यभाजनं प्रेताय दद्यात् आशौचप्रकाशे भरद्वाजः ग्रासोन्नं
जलं कुंभं प्रदीपं कांस्यभाजनं नग्नप्रच्छादनं श्राद्धे ब्राह्मणाय निवेदयेत् भृगुः तिलोदकं तथा पिंडं नग्नप्रच्छादनादिकम् रात्रौ न कु
र्यात्संध्यायां यदि कुर्यान्निरर्थकं अथ प्रेतपिंडः यद्यपि हेमाद्रौ पारस्करेण ब्राह्मणे दश पिंडास्तु क्षत्रिये द्वादश स्मृताः वैश्ये पंचदश प्रो
क्ताः शूद्रे त्रिंशत्प्रकीर्तिता इत्युक्तं तथापि प्रेतेभ्यः सर्ववर्णेभ्यः पिंडान्दद्याद्दशैव हि इति तत्रैवोक्तेः सर्वेषां दशैव ज्ञेयाः मदनरत्नेप्ये
वम् तथा च हेमाद्रौ ब्राह्मपाद्मयोः जात्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि देशधर्माननुसृत्य प्रेतपिंडान्त्रपंत्यपि त्यक्त्वा विप्रा
न्ते तु दशमपिंडोत्कर्षउक्तः देयस्तु दशमः पिंडो राज्ञां वै द्वादशेहनि वैश्यानां चैव पंचदशे देयस्तु दशमस्तथा शूद्रस्य दशमः पिंडो मा
से पूर्णेन्हि दीयत इति पुत्रमृतादेः सद्यःशौचे त्र्यहादौ च तत्रैवोक्तम् सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा त्र्यहाशौचे प्रदातव्यः प्रथ
मेन्ह्येक एव हि द्वितीयेहनि चत्वारस्तृतीये पंच चैव हि त्र्यहे प्रकारांतरं प्रागुक्तम् शातातपः आशौचस्य च ह्रासेपि पिंडान्दद्याद्दशैव तु
तत्रैकपात्रे स कृत्स्नान्दश पिंडान्दद्यात् उत्तरीयशिलापात्रकर्तृद्रव्याणि पर्यये पूर्वदत्तांजलीन्दद्यात्सर्वे पिंडास्तथैव च चैति गृह्यकारि
कायां पात्रविपर्यये दोषोक्तेः शिलाविपर्यये घटस्फोटादेर्नाशात्तिः अक्षाभ्यंजनादिपदकर्मणः एकहायनिनयनवत्प्रयोजकत्वात् तद्व्यात्रा
लौकिकग्रहणम् केचित्तु नवान्यादाय भांडानि आरूकं च रूकं तथेति प्रचेतसोक्तेः पात्रानेकत्वमाहुः क्रियाकर्तुर्नाशेन्येन शेषः समापनी

यः एवंक्रियामकृतानांयदिकश्चिदुपपद्यते नद्वंधुनाक्रियाकार्यासर्वैर्यसहकारिभिरितिशंखलिखितबृहस्पतिस्मृतेः पत्न्याः कर्तृत्वेरजोदर्शनेन्व
नदंतेकुर्यात् शाखाहित्रिगुणमार्तवमित्युक्तेः आशौचांते आर्तवेकर्तुरस्वास्थ्येवान्येनक्रियासर्वावर्तनीयाकर्तुर्विपर्ययात्कालातिक्रमयो
गाच्च पाराहे स्थंडिलेप्रेतभागंतुदद्यात्सूर्वाण्हएवतु कृत्वातुपिंडसंकल्पंनामगोत्रेणकंदरि मरीचिः प्रेतपिंडंबहिर्दद्याद्दर्भमंत्रविव
र्जितम् प्रागुदीच्यांचरुंकृत्वास्नातःप्रयतमानसः दर्भवर्जनमनुपनीतपरं असंस्कृतानांभूमौपिंडंदद्यात्संस्कृतानांकुशेष्विति प्रचे·
तसोक्तेः मिताक्षरायांस्मृत्यंतरे भूमौमाल्यंपिंडंपानीयमुपलेचादद्यः शकनःपुच्छः फलमूलेश्चपयसाशाकेनचगुडेनच तिलमिश्रं
तुदर्भेषुपिंडंदक्षिणतोहरेत् तूष्णींप्रसेकंपुष्पंचधूपंदीपंतथैवच शालिनासक्तुभिर्वापिशाकैर्वाप्यथनिर्वपेत् प्रथमेहनियद्द्रव्यंतदेव·
स्याद्दशाहिकम् मदनरत्नेभारते तैजसंमृन्मयंवाथपात्रंसंशोध्ययत्नतः लौकिकाग्नावधिश्रित्यपचेदन्नंघृतप्लुतम् स्नात्वाथतिलसंमि
श्रंप्रदद्याद्दर्भसंस्तरे शंखलिखितदेवजानीयेच प्राह्ने प्रथमेहनियोदद्यात्प्रेतायान्नंसमाहितः अन्नेनचकृत्वान्येषुसएवप्रदद्यात्सपि मृ·
न्मयंभांडमादायनवंस्नातःस्वसंयतः तंडुलप्रसृतिंतत्रत्रिःप्रक्षाल्यपचेत्स्वयम् सपवित्रैस्तिलैर्मिश्रंकामकेशविवर्जितम् द्वारोपां·
तेततःक्षिप्ताशल्यंचगोरमृत्तिकाम् भूएवंसंस्तरेदर्भान्याम्याग्रान्देशसंभवान् ततोवनेजनंदद्यात्संस्मरन्गोत्रनामनी तिलस·
र्पिर्मधुक्षीरैःसंसिक्तंतसमेवहि दद्यात्प्रेतायपिंडंतुदक्षिणाभिमुखःस्थितः अर्घ्यैःपुष्पैस्तथाधूपैर्दीपैस्तोयैश्चशीतलैः. ऊर्णातंतुम·
यैःशुक्लैःवासोभिःपिंडमर्चयेत् दिवसेदिवसेदेयःपिंडएवंक्रमेणतु सद्यःशौचेप्रदातव्याःसर्वेपियुगपत्तथा त्र्यहशौचेपिदातव्याःत्रय
पिंडाःसमाहितैः द्वितीयेचतुरोदद्यात्अस्थिसंचयनंतथा त्रीस्तुदद्यात्तृतीयेन्हिवस्त्रादिक्षालयेत्ततः दशाहेपिचदातव्यःप्रथमेत्वेक
एवहि एकस्तोयांजलिस्त्वेवंपात्रमेकंचदीयते द्वितीयेद्वौतृतीयेत्रीनित्याद्युत्काएवंस्यः पंचपंचाशत्तोयस्यांजलयः क्रमात् तोयपात्रा

पितायंतिसंयुक्तानितिलादिभिरिति पात्रंकुंभः अत्राहः पदमहोरात्रपरम् तेनरात्रावपिदेयइतिगौडाः दिवसपदाद्रात्रौनेतिमैथिलाः सप्त
वेत्युक्तेः सपिंडेनदशपिंडप्रक्रांतेपुत्रागमेपिसनदद्यात् असगोत्रःसगोत्रोवेतिमनूक्तेः दाहकर्तैवदशाहंकुर्यादितिमिताक्षरायाम् शक्तितस्तु
वायवीयेपि असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् यश्चाग्निदाताप्रेतस्यपिंडंदद्यात्सएवहीतितत्रैव पूरकेणतुपिंडेनदेहोनिष्पाद्य
तेयतः कृतस्यकारणायोगात्पुनर्नावर्ततेक्रिया शर्वरूप्रकाशेवायवीयेपि निवर्तयतियोमोहात्क्रियामन्यनिवर्तिताम् विधिघ्नस्तेनभ
वतिपितृहाचोपजायते तस्मात्सेतक्रियायेनकेनापिचकृतायदि नतांनिवर्तयेत्प्राज्ञःसतांधर्ममनुस्मरन्निति आदिपुराणे पितृशब्दंस्व-
धांचैवनप्रयुंजीतकर्हिचित् अश्रुशब्दंतथाचेहप्रयत्नेनविवर्जयेत् उपतिष्ठतामयंपिंडःप्रेतायेतिसमुच्चरेत् क्रियानिबंधेव्यासः प्रे
तायपिंडंदत्वातुततोश्नीयाद्विनात्यये भविष्ये ओदनामिषसक्तूनांशाकमूलफलादिषु प्रथमेहनियद्दद्यात्तद्द्यादुत्तरेहनि गृहद्वारि
श्मशानेवातीर्थेदेवगृहेपिवा यत्राद्येदीयतेपिंडस्तत्रसर्वंसमापयेत् ब्राह्मे शिरस्त्वाद्येनपिंडेनप्रेतस्यक्रियतेसदा द्वितीयेनतुकर्णौ क्षी
नासिकाश्चसमासतः गलांसभुजवक्षांसितृतीयेनयथाक्रमम् चतुर्थेनतुपिंडेननाभिलिंगगुदानिच जानुजंघेतथापादौपंचमेनतुस
र्वदा सर्वमर्माणिषष्ठेनसप्तमेनतुनाडयः दंतलोमान्यष्टमेनवीर्यंतुनवमेनच दशमेनतुपूर्णत्वंतृप्तताक्षुद्विपर्ययइति याज्ञवल्क्येनतु
पिंडयज्ञावृतादेयंप्रेतायान्नंदिनत्रयमित्युक्तम् अत्रफलतारतम्यंज्ञेयमितिविज्ञानेश्वरः तेनत्र्यहाशौचपरत्वंदेवयाज्ञिकोक्तंचिंत्यं आशौ
चस्यह्रासेपिपिंडान्दद्याद्दशैवतुइतिवचनाच्च दिनत्रयावश्यकत्वार्थमितिहारलतादयः शातातपः जलमेकदशाहमाकाशेस्थाप्यम्
क्षीरंचमृन्मयेपात्रेस्त्रः मृन्मयेतांरात्रौक्षीरोदकेविहायसिनिदध्युः प्रेतात्रस्नाहीत्युदकं पिबचेदमितिक्षीरम् इदंरात्रावेवेतिगौडाः
गारुडेतु अपक्वेमृन्मयेपात्रेदुग्धंदद्याद्दिनत्रयमित्युक्तम् हेमाद्रौपाद्येतुद शाहमुक्तम् तस्मान्निधेयमाकाशेदशरात्रंपयोजलम्

सर्वतापोपशांत्यर्थमध्वश्रमविनाशनम् देवजातीयेकारिकायाम् तत्रभैनोपकूनयेद्दशरात्रमखंडितम् कुर्यात्प्रदीपंतैलेनवारिपात्रंचभार्ति
कम् भोज्यान्नभोजनकालेतुभक्तमुष्टिंचनिर्वपेत् नामगोत्रेणसंबुध्याधरित्र्यांपितृयज्ञवत् शातातपः भूलोकात्प्रेतलोकंतुगंतुंश्राद्धं
समाचरेत् नसापेयांहिभवतिमृतस्यमनुजस्यतु अथदशाहमध्येदर्शपातेनिर्णयः भविष्ये प्रवृत्ताशौचतंत्रस्तुयदिदर्शमिपद्यते समा
प्यचोदकंपिंडान्स्नानमात्रंसमाचरेत् ऋष्यशृंगः आशौचमंतरादर्शोयदिस्यात्सर्ववर्णिनां समाप्तिंप्रेततंत्रस्यकुर्यादित्याहगौतमः पै
ठीनसिः आद्येदावेवकर्तव्याप्रेतपिंडोदकक्रिया द्वितीयेदत्तेतुकुर्वाणः पुनःशापंसमश्नुते मातापित्रोस्तुश्लोकगौतमः अंतर्दशाहदर्श
नत्सर्वंसमापयेत् पित्रोस्तयायदाशौचंदद्यात्पिंडान्जलांजलीन् इदमपित्र्यहमध्येदर्शपाते तदूर्ध्वंदर्शेतुपित्रोरपितंत्रंसमाप्यमेव पित्रोराशौचमं
ध्येतुयदिदर्शःसमापतेत् तावदेवोत्तरंतंत्रंपर्यवस्येत्त्र्यहात्परमितिगालवोक्तेः अन्येषांतुत्र्यहमध्येपिसमाप्तिरितिपराशरमाधवीयेनिर्णयामृतेचो
क्तं कालादर्शेपि दर्शोदशाहमध्येस्यादूर्ध्वंतंत्रंसमापयेत् त्रिरात्रादुत्तरंपित्रोर्मृतास्त्रिभिर्विनिश्चयः मदनपारिजातेतुगालवीयमापदगौरसपुत्रादि
विषयम् त्र्यहोर्ध्वमपिपित्रोर्नतंत्रसमाप्तिरित्युक्तंमदनरत्नेप्येवं ममतुदेशाचारात्व्यवस्थेतिप्रतिभाति अथास्थिसंचयः तत्राश्वलायनेनन्नकृष्णाप
क्षेएकादशीत्रयोदशीदर्शेपुआषाढाफल्गुनीप्रोष्ठपदाभिन्नक्षेउक्तं तदाशौचमध्येसंभवेतदूर्ध्वंचमागब्दात्करणेज्ञेयं आशौचमध्येतुमदन
रत्नेसंवर्तः प्रथमेन्हितृतीयेवासप्तमेनवमेतथा अस्थिसंचयनंकार्यंदिनेतद्गोत्रजैःसह छंदोगपरिशिष्टेतु अपरेद्युस्तृतीयेवाअस्थिसं
चयंभवेदिति द्वितीयेप्युक्तम् विष्णुकात्यायनौसंचयनंचतुर्थ्यामिति माधवीयेयमः भौमार्कमंदवारेषुतिथियुग्मेविवर्जयेत् वर्जयेदेकपादर्क्षे द्वि
पादर्क्षेस्थिसंचयम् प्रत्यक्जन्मनक्षत्रेत्रिपादर्क्षेविशेषतः ब्राह्मे चतुर्थेब्राह्मणानांतुपंचमेहनिभूभृतां नवमेवैश्यजातीनांशूद्राणांदशमा-
त्परम् दशमेहनीतिपाठः शौनकः पालाशोयास्थिदाहेचसद्यःसंचयनंभवेत् काम्यमरणेतुतस्यात्रिरात्रमाशौचं द्वितीयेत्वस्थिसंचयइत्यु

न्कं अंगिरा: प्रेतीभूतंतथोद्दिश्ययः श्राद्धंनकरोतिचेत् देवतानांतुयजनंनश्यत्यथदेवताः तद्विधिः स्वसूत्रेभट्टकृतोज्ञेयः हेमाद्रौनागरखंडे
त्रीणिसंचयनस्यार्थेनानिवेश्ःशृणुसांप्रतं यत्रस्थानेभवेन्मृत्युस्तत्रश्राद्धंप्रकल्पयेत् एकोद्दिष्टंततोमार्गेविश्रामोयत्रकारितः ततःसंचयनस्यार्थे
तृतीयंश्राद्धमिष्यते अपराह्णेमदनरत्नेचश्राद्धे सद्यःशौचेतथैकाहेसद्यःसंचयनंभवेत् त्र्यहाशौचेतृतीयेन्हिकर्तव्यस्त्वस्थिसंचयः तत्रै
व स्मशानदेवतायागंचतुर्थेदिवसेचरेत् मृन्मयेषुचभांडेषुकुंभेषुरुचकेषुवा सूपक्वैर्भक्ष्यभोज्यैश्चपायसैःपानकैस्तथा फलैर्मूलैर्वनो
द्भैश्चपूज्याः क्रव्याददेवताः धूपदीपस्तथामाल्यमर्घ्यंदेयंस्वरान्वितैः तत्रपात्राणिपूर्णानिस्मशानाग्नेःसमंततः निवेदयद्भिर्वक्तव्यंतैःस
र्वैरनहंकृतैः नमःक्रव्यादमुख्येभ्योदेवेभ्यइतिसर्वदा येत्रस्मशानेदेवाःस्युर्भगवंतःसनातनाः तेस्मत्सकाशाद्गृण्हंतुबलिमष्टांगमक्षयं प्रेत
स्यास्यशुभान्लोकान्प्रयच्छंतुचशाश्वतान् अस्माकमायुरारोग्यंसुखंचददताचिरम् एवंकृत्वाबलीन्सर्वान्क्षीरेणाभ्युक्ष्यवाग्यतः एवंदत्वा
थलिंचैवदद्यात्पिंडत्रयंबुधः एकंस्मशानवासिभ्यःप्रेतायैवतुमध्यमम् तृतीयंतत्सखिभ्यश्चदक्षिणासंस्थमादरात् ततोयज्ञियवृक्षोत्थां स्रु
चामादायवाग्यतः प्रेतस्यास्थीनिगृण्हातिप्रधानांगोद्भवानिच शिरसो वक्षसोःपाण्योःपार्श्वाभ्यांचैवपादतः पंचगव्येनसंस्नाप्यक्षौमवस्त्रेणवे
ष्टयेत् प्रक्षिप्यमृन्मयेभांडेनवेसाच्छादनेशुभे अरण्येवृक्षमूलेवाशाद्वेसंस्थापयत्यपि गृहीत्वास्थीनितद्भस्मनीत्वातोयेविनिक्षिपेत् ततः
संमार्जनंभूमेःकर्तव्यंगोमयांबुभिः पूजांचपुष्पधूपाद्यैर्बलिभिःपूर्ववत्क्रमादिति अथतीर्थेस्थिक्षेपविधिः तत्रैव तत्स्थानाच्छनकैर्नीत्वा
कदाचिज्जान्हवीजले कश्चित्क्षिपतिसद्बन्धोदौहित्रोवासहोदरः मातृकुलंपितृकुलंवर्जयित्वानराधमः अस्थीन्यन्यकुलस्यत्यनीत्वाचांद्रा
यणंचरेत् तत्रैवब्रह्मांडपुराणे अस्थीनिमातापितृपूर्वजानांनयंतिगंगामपियेकथंचित् सद्बांधवस्यापिदयाभिभूतास्तेषांतुतीर्थानिफलप्रदा
नि स्नात्वाततःपंचगव्येनसिक्त्वाहिरण्यमध्वाज्यतिलैश्चयोज्य ततस्तुमृत्पिंडपुटेनिधायपश्यन्दिशंप्रेतगणोपगूढाम् नमोस्तुधर्मायवदे:

थमृदाचाथविशङ्कया नाम्नसंपुटके कृत्वामातुरंगान्यथोवहेत् व्यासः पट्टवस्त्रंचकौशेयंमांजिष्ठंश्वेतवस्त्रकम् कंबलंशाणपट्टंच
अजिनंचतथोत्तरम् एषांविकल्पः अन्यश्चात्रविशेषस्त्रिस्थलीसेतौदिवोदासीयेन ज्ञेयः संचयनोत्तरंश्राद्धमाहाश्वलायनः श्राद्धम
स्मैदद्युरितिस्मृत्यर्थसारे संचयनेकृतेमनुष्यलोकंगच्छतःपाथेयश्राद्धमामेनकार्यमिति अनुपनीतस्यनसंचयनम् अथनवश्राद्धं प्र
थ्वीचंद्रोदयेंगिराः प्रथमेन्हितृतीयेचपंचमेसप्तमेतथा नवमेकादशेचैवतन्नवश्राद्धमुच्यते शिवस्वामी नवश्राद्धानिपंचाहुराश्वलायन
शाखिनःआपस्तंबाःषडित्याहुर्विभाषान्तरेषुहि पंचएकादशाहिकंविना मरणाद्विषमेषुदिनेष्वेकैकंनवश्राद्धंकुर्यात्नवमाद्यदि नवमंवि
च्छिद्येतेकादशेनकुर्यादितिमदनरत्नेबोधायनोक्तेः भविष्ये नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात् आद्यंतयोर्वर्णयोक्तं षडित्याहुर्महर्षे
यः हेमाद्रौरुद्रवसिष्ठः अलब्ध्वातुनवश्राद्धंमेतत्वान्नैवमुच्यते अर्वाक्तुद्वादशाहस्यलब्ध्वान्तरन्तुछत्रम् अतःषडेव एतान्येवविषम
श्राद्धान्युच्यंते नागरखंडेतु पंचमेसप्तमेतद्वद्दशमेनवमेतथा दशमेकादशेचैवनवश्राद्धानितानिवैस्मृतम् कात्यायनस्तु चतुर्थेपंचमेचै
वनवमेकादशेतथा यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते प्रथमेसप्तमेचैवेत्याद्यपादेव्यासपाठः बह्वृचानांतु नवश्राद्धदशाहानिनवमिश्रं
तुषड्तुनवेनिरुक्तम् नारायणवृत्तौदीपिकायाम् अथतत्रयादायेचतुर्थेदिनेश्राद्धंपंचमसप्तमाष्टनवदिग्रुद्रेषुयुग्मदिनेः प्रथमेन्हितृती
येन्हिपंचसप्तनवस्वपि द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकंतुविन्यसेत् एकोविषमश्राद्धेचयवपिंडश्चैकएवितिहाविस्तर्यः अत्रशाखाभेदाद्व्यवस्था
अपरार्केभविष्ये नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच नकरोतिसुतोयस्तुतस्याधःपितरोगताः वाराहे गतोसिदिव्यलोकंत्वं कृतांतविहित
पथः मनसावायुभूतेनविप्रेत्वाहंनियोजये पूजयिष्यामिभोगैस्त्वामेवंविप्रंनिमंत्रयेत् . आवाहनेपितत्रैव इहलो
कंपरित्यज्य गतोसिपरमांगतिम् मनसावायुभूतेनविप्रेत्वाहंनियोजयइति तत्रैवबह्वृचपरिशिष्टे अन्नूदकमधू

पंनगंधमाल्यादिवर्जितम् नवश्राद्धगमंत्रंचपिंडोदकविवर्जितम् उदकमर्घ्यःपिंडोदकंभुंधंतांपितरइत्यवनेजनादि एकोद्दि
ष्टेषुसर्वेषुनस्वधानाभिरम्यताम् अग्नौकरणमंत्रश्च एकंवायतिलोदकम् अनपत्येषुसर्वेषुनस्वधानाभिरम्यताम् स्वस्त्
यक्षनिसृजेद्देवंसकृत्प्रणवर्जितम् एकोद्दिष्टस्यपिंडेतु अनुशब्दोनविद्यते पितृशब्दंनकुर्वीतपितृहाचोपजायते सपिंड
नात्प्रागितिहेमाद्रिः तेनस्वधांप्रयुंजीतप्रेतश्राद्धेदशाहिके इतिकल्पतरूंगोक्तौ दशाहिकोक्तेरेकादशाहेस्वधाप्रयोगएवे
तिहारलतापरास्ता रत्नावल्याम् आशिषोद्विगुणादर्भाजयाशीःस्वस्तिवाचनम् पितृशब्दःस्वसंबद्धःशर्मशब्दस्तथैवच
पात्रालंभोवगाहश्चउल्मुकोल्लेखनादिकम् तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच प्रदक्षिणाविसर्गश्चसीमांतगमनंत-
था अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्जयेत् अत्रस्वधापितृनमःशब्दानांतिलोसीतिमंत्रेप्रेतशब्दोहेनतूष्णींवातिलाव
पनम् तूष्णीमर्घ्यदानम् अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः नाम्नाएकःपिंडःनिनयनमंत्रेऊहः अनुमंत्रणादित्व
मंत्रकम् अभिरम्यतामितिविसर्जनम् एवंनवश्राद्धवर्जेकोद्दिष्टेषु नवश्राद्धेत्वमंत्रकं सर्वमितिनारायणवृत्तिः क्रिया
निबंधे उत्तानंस्थापयेत्पात्रमेकोद्दिष्टेसदाबुधः न्युब्जंतुपार्वणंकुर्यात्तस्योपरिकुशान्न्यसेत् नवश्राद्धंगृहेकुर्याद्भार्यां
यत्राग्नयोपिवा सपिंडीकरणांतानिप्रेतश्राद्धानियानिवै तानिस्युर्लौकिकेवह्नावित्याहत्वाश्वलायनः इदंसंभवेन्नेनका
र्यम् नवश्राद्धेपुयच्छिष्टंगृहपर्युषितंचयत् दंपत्योर्भक्तशेषंचनतद्भुंजीतकर्हिचिदित्यंगिरोवचनलिंगात् द्वाभ्यांनद्या
तुकृच्छ्राभ्यांशुद्धिःस्यात्तुविवेकिनामितिनिबंधोक्तम् विप्रेतुनिर्णयामृतेकण्वः नवश्राद्धंमासिकंचयद्यदन्नाशितंभवेत्
तत्तदुत्तरसानंत्यात्तुष्टयंप्रचक्षते हेमाद्रौगालवः शावंतुसूतकंचेत्स्यान्निशायांचमृतोतथा नवश्राद्धानिदेयानि

यथाकालंयथाक्रमम् निशायामाशौचांतेद्यहस्त्वद्धो अन्वारोहणेतु नवश्राद्धानिसर्वाणिसपिंडीकरणंपृथक् एकएवकृषो
त्सर्गोगौरेकात्तत्रदीयते आशौचांत्यदिनेकार्यमुक्तम् श्राद्धे यस्ययस्यतुवर्णस्ययद्यत्स्यात्पश्चिमंत्वहः सतत्रवस्त्रशुद्धिंच
गृहशुद्धिंकरोत्यपि समाप्यदशमंपिंडंप्रेतस्पृष्टेतुवाससी अंत्यानामाश्रितानांचसत्कारस्नानंकरोतिच श्मश्रुलोमनखा
नांचयत्स्याज्यंतज्जहात्यपि गौरसर्षपकल्केनतिलकल्केनसंयुतम् शिरःस्नानंततःकृत्वातोयेनाचम्यवाग्यतः वृषभंगांसु
वर्णंचस्पृष्ट्वाशुद्धोभवेन्नरः क्रियानिबंधेगृह्यकारिकायाम् अत्रपिंडत्रयंदद्युस्तत्सखिभ्यस्तथादिमम् प्रेतायमध्यमंत
त्तृतीयंचयमायवै तथा कर्त्रात्रप्रार्थिताःसंतोज्ञातिसंबंधिबांधवाः दद्युरग्न्यंगतःपूर्वंत्रींस्त्रीन्धर्मोदकाञ्जलीन्
पूर्ववन्नामगोत्राभ्यांनियमोनेहकश्चन मदनरत्नेविष्णुहारीतौ आशौचांतेकृतश्मश्रुकर्माणस्तिलकल्कैःसर्षपक
ल्कैर्वास्नाताःशुक्लवाससोगृहंप्रविशेयुस्तत्रशांतिकंकृत्वाब्राह्मणपूजनंकुर्युरिति देवलः दशमेहनिसंप्राप्तेस्नानंग्रामा
द्बहिर्भवेत् तत्रत्याज्यानिवासांसिकेशश्मश्रुनखानिच अपरार्केबृहस्पतिः नवमेवाससांत्यागोनखरोम्णांतथांतिमे
तत्रैवव्यासः आशौचांत्यदिनेक्षौरंजनन्यांचगुरौमृते एतत्स्रेतल्पवयसामित्याहापस्तंबः अनुभाविनांचपरिवपन-
मिति अनुभाविनःकनिष्ठाइतिविज्ञानेश्वररत्नाकरादयः आशौचमनुभवतांपुंसांसर्वथौचेतुमुंडनम् आज्ञयानरप
तेर्द्विजन्मनांदारकर्ममृतसूतकेषुच बंधमोक्षमखदीक्षणेष्वपिक्षौरमिष्टमखिलेषुचोडुषुइतिरत्नमालोक्तेर्जननाः
शौचेपीतिशुद्धितत्त्वादयः अत्रदेशाचारतोव्यवस्था परिशिखावर्ज्जं केशश्मश्रुनखलोमानिवापयीतशिखावर्ज
मितिगोभिलोक्तेः यत्त्वापस्तंबः नसमावृत्तावपेयुरन्यत्रविहारादित्येकेविहारोदर्शादियागः तेनविनासमावृत्तागृह

शाप्यविरोधात् भविष्ये एकादशभ्योविप्रेभ्योदद्यादेकादशेहनि भोजनंतत्रचैकस्मैब्राह्मणायमहात्मने यंतुमात्स्ये एकादशेहनि
तथाविप्रानेकादशैवतु क्षत्रादिःसूतकांतेतु भोजयेदयुजोद्विजानिति तद्दुद्गणश्राद्धपरमितिमदनपारिजातः गौडास्तस्माद्वचनात्
क्षत्रियादीनामाशौचांतएवेत्याहुः रामायणेपि समतीतेदशाहेतुकृतशौचोयथाविधि चक्रेद्वादशिकंश्राद्धंत्रयोदशिकमेवच
द्वादशिकंद्वादशाहेनभिवस्यैत्रयोदशाहश्राद्धंत्रयोदशिकंचतुर्दशाहविधेयंसपिंडनपार्थेयादि क्षत्रियाणांद्वादशाहाशौचेत्रयो
दशेमहैकोद्दिष्टंचतुर्दशेसपिंडनम् द्विविधवाक्यादेकादशाहाशौचांतयोर्विकल्पइत्येके सद्यःशौचादौतुद्धहतादेरेकादशाहः
अन्येषांभाशौचांतइतिवयंकौर्मे एकादशेह्निकुर्वीतप्रेतमुद्दिश्यभावतः द्वादशेवाह्निकर्तव्यमनिंद्येप्यथवाहनि निंद्यंप्रेतक्रिया
कालउक्तं एकादशेत्नुनिषेधइत्युक्तंप्राक् बृहस्पतिः वस्त्रालंकारशय्यादिपितुर्यद्वाहनादिकम् गंधमाल्यैःसमभ्यर्च्यश्राद्धभो
क्तेतदर्पयेत् श्रोत्रियाभोजभोयास्तुनवसमत्रयोदश जातयोवांभवानिःस्वास्तथाचातिथयोपरे देवयाज्ञिकनिबंधे एकाद
शस्मविप्रेषुभेनमापाल्यभोजयेत् तथाधायूचशय्यादिदद्याद्द्यामितिस्मृतम् विष्णुः एकवन्मंत्रानूहेनैकोद्दिष्टेबहुवचनांतानेक
वचनांतान्वदेदित्यर्थः एतद्दृष्टार्थत्वे अस्याविभेगौणकालमाहहेमाद्रौबौधायनः एकोद्दिष्टंश्वएवस्यात्द्वादशेहनिवापुनः अन
ऊर्ध्वमयुग्मेषुकुर्वीताह्स्वशक्तितः अर्धमासेथवामासिऋतौसंवत्सरेपिवेति तत्रैवस्युहारीतः एकोद्दिष्टंतुकुर्वीतपाकेनैवसदा
स्वयम् अभावेपाकपात्राणांतदहःसमुपोषणं गोभिलः ब्राह्मणंभोजयेदाद्येहोतव्यमनलेथवा पुनश्चभोजयेदन्यंद्विरावृत्तिर्भ
वेदिति एतदाद्यमासिकाद्याब्दिकयोःसिद्धार्थमितिभट्टाः तेनमहैकोद्दिष्टंषोडशश्राद्धाद्भिन्नमेव अतएवाद्यंसर्वैर्कोद्दिष्टप्रकृतिम्
तमेकादशाहइतिविज्ञानेश्वरः अन्येत्वाद्यमासिकाब्दिकयोराद्यमेकादशेहनीतिनियमादभेदमाहुः द्वयोस्तंत्रत्वबाधार्थंगालवीप

भिसनं पुद्दहनादौतु हेमाद्रौ पृथ्वीचंद्रोदये पैठीनसिः सद्यःशौचेपि दातव्यं प्रेतस्यैकादशेऽहनि स एव दिवसस्तस्य शय्यासनादिषु
ष्वमेवमदशाहादौ अतो वाद्वितीयेऽह्न्येकादशाहवत् दोह्‌ शूलपाणिः स्मार्तगौड श्च परास्ताः एतेनाद्यमेकादशेऽहनीत्याशौचानंतर
दिनपरमिति निरस्तं प्रागुक्तशंखादिवचनानां नानाकर्तृत्वादिति वदंतः कल्पतरुवाचस्पतिप्रमुखाः सर्वमहानिबंधविरोधा.
पेक्ष्यां उशनाः त्र्यहाशौचेपि कर्तव्यमाद्यमेकादशेऽहनि अतोनात्र विषये सद्यस्त्र्यहाशौचेवा तदिष्यते याज्ञवल्क्यः एकोद्दिष्टं दैवहीनमे
कार्घ्यैकपवित्रकं आवाहनाग्नौकरणरहितं त्वपसव्यवत् उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने अभिरम्यतामिति वदेत्ते चाभिर
ताःस्मइति अग्नौकरणनिषेधोऽन्यपरः वह्वृचानां सर्वैकोद्दिष्टेषु तद्दर्शनेनेत्युक्तं प्राक् स्वादितमिति तृप्तिप्रश्नः इति कात्यायनः प्रथमे
पात्रे संस्रवानित्यस्य तृतीयेनापिधानस्य चबाधान्नपात्रत्युक्तौ तेनि शूलपाणिः प्रचेताः नात्र पात्रालंभो नाशिषः प्रार्थयेत् उ
विशेषो हेमाद्रौ वाराहे श्मश्रुकर्म तु कर्तव्यं नखच्छेदस्तथैव च स्नपनाभ्यंजनं स्यादि प्रायविधिपूर्वकं तथा उपवेश्यासने भद्रे
छत्रं तत्र प्रकल्पयेत् पश्चादुपानहौ दद्यात्सर्वाण्याभरणानि च विष्णुः दक्षिणाग्रमारभ्युक्तादन्तासयोर्द्वे चतुरंगुलपृथ्वी
स्तावदंतराला स्तावदधःखाता वितस्त्यायताः तिस्रः कर्षूः कुर्यात् कर्षूणां समीपेऽग्निमाधाय परिस्तीर्यैकैकस्मिन्नाहुतित्रयं
जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय यमायांगिरसे ततः स्थानत्रये प्राग्वत् पिंडनिर्वपणं दधिमधुघृतमां
सैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत् शेषं नवश्राद्धवत् अत्र साग्नेरप्यनेनैव स्वदेवस्य सक्तं प्राक् दशाहकर्त्रा पुत्रेण वा कार्यमित्यु
क्तं विप्राणिचापि गृह्यकारिकायां तिलोसिभेतदेवत्यः प्रेतलोकान्हिनोतु के मंत्रमुक्त्वा तिलान्नेवं प्रक्षिपेदर्घ्यपात्रतः दक्षिणामु
खः कुंभेन सान्नं दत्वा नवे चगां तं स्मरेद्धार्हकं प्रेतश्रो धनदौ डान्यपि भाजनं विप्राभावे त्वग्नौ वैकोद्दिष्टं अग्नौ पायसं श्रपयित्वाज्यभा

दंतपत्रचितां रम्यां हेमपट्टैरलंकृताम् हंसतूलीप्रतिच्छन्नां शुभगंडोपधानिकाम् प्रच्छदनपटीयुक्तां गंधधूपादिवासिता
म् तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् अत्र हरिस्थाने प्रेतम् उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् तांबूलं कुंकु
मक्षोदकर्पूरागरुचंदनम् दीपिकोपानहौ छत्रचामरासनभाजनम् पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि
शयनस्थस्य भवति यदन्यदुपकारकम् भृंगारकरकाद्यं तु पंचवर्णवितानकम् मंत्रस्तु यथा न कृष्ण शयनं शून्यं सा
गरजालया शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि यस्मादशून्यं शयनं केशवस्य शिवस्य च अर्थेन देवं दत्तेवं त
स्य सकलं मणिपत्य विसर्जयेत् एकादशाहेपि तथा विधिरेष प्रकीर्तितः विशेषं चात्र राजेंद्र कथ्यमानं निशामय ते
नोपभुक्तं यत्किंचित् वस्त्रवाहनभाजनम् यद्यदिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् तमेव पुरुषं हैमं तस्यां संस्थाप
येत्तदा पूजयित्वा प्रदातव्या मृतशय्या यथोदिता पाद्मे मृतकांते द्वितीयेन्हि शय्यां दद्यात्सलक्षणां कांचनं पुरुषं तद्व
त्फलवस्त्रसमन्वितम् संपूज्य द्विजदांपत्यं नानामणिविभूषितम् उपवेश्य तु शय्यायां मधुपर्कं ततो वदेत् रजतस्य
तु पात्रेण दधिदुग्धसमन्वितम् अस्थिलालाटिकं गृह्य सूक्ष्मं कृत्वा सपायसम् भोजयेद्द्विजदांपत्यं विधिरेष सनात
नः एष एव विधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः एतच्च प्रतिग्रहे तत्रैवोक्तम् गृहीतायां तु तस्यां वै पुनः संस्कारमर्हति श
य्यादानफलं भविष्ये स्वर्गे पुरंदरपुरे सूर्यपुत्रालये तथा सुखं वसत्यसौ जंतुः शय्यादानप्रभावतः आभूतसंप्लवं या
वत्तिष्ठत्यातंकवर्जितमिति अथोदकुंभः हेमाद्रौ स्मृतिसमुच्चये एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः दिने दि
ने प्रदातव्यो यावत्संवत्सरं स्फुटं लौगाक्षिः यस्य संवत्सरादर्वाक् सपिंडीकरणं भवेत् मासिकं चोदकुंभं च देयं त-

धर्मेन: प्रेतशब्दोच्चारणेनेतिहस्तायुधः यद्यपि प्रेतस्यनिर्देशोयत्रनदेकोद्दिष्टंनडुमैकमित्यर्थः अत्राशौचांतदिनाद्यब्दांतंया
वद्वत्सरापूर्तेःशौचंनाधिकारिविशेषणम् तेनमृतिदिनमारभ्यैतत्कार्यमितिकेचित् तन्न हेमाद्रिधृतवचोविरोधात्
मध्येआशौचादिनाबाधेतुलोपएवदार्शवत् तथाप्रथमाब्देदीपदानमुक्तंदेवजानीयेगारुडे प्रत्यहंदीपकोदेयोमार्गेत्तुवि
षमेनरैः यावत्संवत्सरंवापिप्रेतस्यसुखलिप्सया प्रज्वल्योदङ्मुखंदीपं देवागारेद्विजालये कुर्याद्याम्यमुखंपथ्येआङ्कः
संकल्पस्कास्थितम् अथमासिकानि तानिचकृत्वैवसपिंडनंकार्यम् तथागोभिलःसोगाक्षी श्राद्धानिषोडशादत्वानै
वकुर्यात्सपिंडनम् श्राद्धानिषोडशाप्यार्थविद्धानसपिंडनम् तानित्वाहजातूकर्ण्यः द्वादशप्रतिमास्यानिआद्यषाण्मा
सिकंतथा त्रैपक्षिकाब्दिकेचैतिश्राद्धान्येतानिषोडश आद्यषाण्मासिकाब्दिकशब्दाःऊनमासिकोनषष्ठोनाब्दिकपराः हे
माद्रौतुसपिंडीकरणंचैवइत्यनन्तरश्राद्धषोडशामित्युत्तरार्द्धपाठः तदा आद्यमूनमासिकंद्वादशाहं षाण्मासिकंऊनषष्ठोना
ब्दिकेइत्यर्थः कात्यायनस्त्वन्यथाह द्वादशप्रतिमास्यानिआद्यषण्मासिकेतथा सपिंडीकरणंचैवएतत्सेनत्श्राद्धषोडशम् ए
काहेनतुषण्मासायदास्युरपिवात्रिभिः न्यूनाःसंवत्सरश्चैववस्यात्तांषण्मासिकेतदा इतिवचनादूनषष्ठोनाब्दिकेइत्यर्थसाह
पृथ्वीचंद्रः व्यासस्त्वन्यथाह द्वादशाहेत्रिपक्षेचषण्मासेमासिकाब्दिके श्राद्धानिषोडशैतानिसंस्मृतानिमनीषिभिः द्वादशा
हपदमूनमासिकपरं तस्यद्वादशाहएवउक्तोविनिकालादर्शः मदनरत्नश्राद्धेत्वन्यथोक्तम् नृणांतुत्यक्तदेहानांश्राद्धाःषोड
शास्तदा चतुर्थेपंचमेषष्ठेनवमेकादशेतथा ततोद्वादशभिर्मासैःश्राद्धाद्वादशसंख्ययेति चतुर्थादीनिदिनानि प्रवि-
ष्टेत्यन्यथाक्रम अस्थिसंचयनंश्राद्धम् त्रिपक्षेमासिकानितु विकृतंश्वनथातिथ्योःप्रेतश्राद्धानिषोडशानि विकृत्यां

स्ति थ्येरितिन्यूनपक्षेनाब्दिकपरमितिहेमाद्रिः अत्रदेशकुलशाखाभेदाद्यवस्थेतिसर्वनिबंधाःगालवः ऊनषाण्मासिकं
षष्ठेमासेवान्यूनमासिकम् त्रैपक्षिकंत्रिपक्षेस्यादूनाब्दद्वादशेतथा ऊनमासिकेतुगोभिलः मरणाद्द्वादशाहेस्यान्मासेन्यूने
चोनमासिकम् मदनरत्नेकालादर्शेचश्लोकगौतमः एकद्वित्रिदिनैरूनेत्रिभागेनोनएववा श्राद्धान्यूनाब्दिकादीनिकुर्या
दित्याहगौतमः क्रियानिबंधेऋतुस्तु सार्द्धएकादशेमासेसार्द्धेवैपंचमेतथा ऊनाब्दमूनषण्मासंभवेतांश्राद्धकर्मणीत्युक्तं
तत्रमूलंचिंत्यम् ऊनेषुवर्ज्यान्याहमरीचिः द्विपुष्करेचनंदासुसिनीवाल्यांभृगोर्दिने चतुर्दश्यांचनोनानिकृत्तिकासुत्रिपु
ष्करम् ज्योतिषे त्रिपादर्क्षतिथिर्भद्राभौमेज्यरविभिःसह तदात्रिपुष्करोयोगोद्व्योर्योगेद्विपुष्करः गालवः त्रिभिर्वादि
वसैरूनेत्वेकेनाह्नितयेनवा आद्यादिषुचमासेषुकुर्यादूनाब्दिकादिकम् एकन्यूनपक्षेपंचम्यांमृतस्यतृतीयायांत्रिभि
र्न्यूनेप्रतिपदिद्व्यूनेद्वितीयायामितिकेचित् माधवस्तुषाण्मासिकाब्दिकेश्राद्धेस्यातांपूर्वेद्युरेवते मासिकानिस्वकीयेतु
दिवसेद्वादशेपिचेतिपैठीनसिवाक्येऊनषाण्मासिकंसप्तममासगतमृताहात्पूर्वेद्युः कार्यम् ऊनाब्दिकंतुद्वितीयाब्दस्
ताहदिनात्पूर्वेद्युःकार्यमित्यर्थमाह मासिकानिस्वकीयेतुदिवसेइत्युक्तेः इदमेवयुक्तम् मदनरत्नेप्येवम् याज्ञवल्क्यः
मृतेहनितुकर्तव्यंप्रतिमासंतुवत्सरम् प्रतिसंवत्सरंचैवमाद्यमेकादशेहनि अत्राद्यमासिकमाब्दिकंचैकादशेन्हीतिवि
र्णयामृतादयः ब्राह्मणंभोजयेदाद्येहोतव्यमनलेथवा पुनश्चभोजयेद्विप्रांद्विरावृत्तिर्भवेदितीतिगोभिलीयंचतद्विषयमा
हुः अन्येतुमासपक्षतिथिस्पृष्टेइत्यादिविरोधादाब्दिकंवर्षांतमेव मासिकंतुमासादौ द्विरावृत्तिस्तुएकादशाहिकाद्य
मासिकपरा रेनयाज्ञिकोप्येवमाह् सोमाक्षिराप मासादौमासिकंकार्यमाब्दिकंवत्सरेगते आद्यमेकादशेकार्यमाि

कैलधिकंभवेत् दीपिकायांतु आद्यंरुद्रमितेर्कसंमितदिनेवास्यादित्युक्तम् गौडास्तु मृततिथ्यवधिके एकदिनाधिकेमास
संवत्सरपरंगौणंपूर्णेऽब्दे इति ईषदसमाप्तपरत्वमितिशूलपाणिः तेनद्वितीयमासादावाद्यमासिकादीनि तन्मोरर्थेकृतं
अशक्तौतुहारीतः मुख्यंश्राद्धंमासिमासिअपर्याप्तावृतुंप्रति द्वादशाहेनवाकुर्यादेकाहेद्वादशापिवा ऋतुंप्रतिद्वेद्वेइत्यर्थः
यदापितुर्मरणात्त्रयोविंशतितमेदिनेदर्शोऽतिद्विर्वास्यात्तदाद्वादशदिनेषुद्वादशमासिकानिकार्याणीत्यर्थः त्रैपक्षिकंतुत्रिप-
क्षेनोत्तेमृताहेकार्यं त्रैपक्षिकंभवेदूनेत्रिपक्षेतदनंतरमितिभविष्योक्तेरितिमदनरत्नेउक्तम् पृथ्वीचंद्रकालादर्शनिर्णया
मृतादपस्तु ऊनान्यूनेषुमासेषुविषमाहेसमेपिवा त्रैपक्षिकंत्रिपक्षेस्यान्मृताहेत्वितराणितुनिकार्याणिजाबालिस्मृतेः पूर्वत्रह
तेमदनरत्नेस्त्यर्थमाहुः तेनतदनंतरशब्दविरोधात्त्रैपक्षिकद्वितीयमासिकयोःसंकरापत्तेरेवंव्याख्यायांमानाभावाच्चोपेक्ष्याः
त्रिपक्षसपिंडनेत्वेवंशब्दाभावादधिकरणत्वमेवयुक्तंयत्तुक्रियानिबंधेगारुडे त्रैपक्षिकंत्रिपक्षेतुभवत्तोविषमेदिने मा
सिकान्यपिचोनानिअष्टाविंशतिमेऽह्नि इति तन्निर्मूलम् स्मृतिरत्नावल्याम् द्वादशाहेयदाकुर्यात्पितुःपुनःसपिंडनम् ए
कादशीक्कुर्वीतप्रेतश्राद्धानिषोडश पैठीनसिः सपिंडीकरणादर्वाक्कुर्वन्श्राद्धानिषोडश एकोद्दिष्टविधानेनकुर्यात्
सर्वाणितानितु सपिंडीकरणादूर्ध्वंयदाकुर्यात्तदापुनः प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्तान्यपि मदनरत्नेकात्याय-
नः श्राद्धमग्निमतःकार्यंदाहादेकादशेऽहनि ध्रुवाणितुप्रकुर्वीतप्रमीताहनिसर्वदा ध्रुवाणित्रैपक्षिकादूर्ध्वानि क्रियानिबं-
धेगारुडे त्रिपक्षात्पूर्वतःसाग्नेर्भवेत्संस्कारवासरे ऊर्ध्वंमृतदिनेनग्नेःसर्वाण्येवमृताहतः एतानिचयदासपिंडनात्पूर्वं
युगपत्कुर्यात्तदादेशकालकर्त्रैक्यतंत्रत्वादेकःपाकइतिकेचित् पाकभेदइतिभट्टचरणाः अत्रकेचिदाहुः देशकालदैव-

तान्येवतुपुनःकुर्यात्तेनशब्दंनकारयेत्

तेनैवेनंत्रसात् श्राद्धकालातिक्रमापत्ते र्द्वादशाहेथसर्वाणिसंक्षेपेणसमापयेत् तान्येवतुपुनःश्रा
तिकात्यायनोक्तेर्नैकश्राद्धद्वयंकुर्यात् समानेहनिकुत्रचिदित्यस्यदैवतैक्यपरत्वेप्यत्रतत्सत्वाच्छ्राद्धं कृत्वातुतस्यैवपुनःश्रा
द्धंनकारयेदितिजाबाल्युक्तेः षोडशसंख्यायाश्चवाजपेयेप्राजापत्ययागसप्तदशत्ववत्सान्नाय्ययागद्वित्ववच्चदर्शपातसं
क्रांतिश्राद्धवत्युगपदनुष्ठानेप्युपपत्तेराद्यमासिकाद्यूनाब्दिकांतेषुषोडशश्राद्धेषुविचक्षणःक्रियतामित्येवंप्रयोगेणैकोवि
प्रःपिंडोर्घ्यंश्चेतिनिरूढविधिविध्वंसेप्येवम् तन्मंदं द्वादशाहेनवाभोज्याएकाहेद्वादशापिवेतिहेमाद्रौहारीतवचोविरोधा
त् तेनविप्रभेदात्पिंडार्घ्याद्यपिभिन्नमितिसिद्धम् एतानिद्वादशाहादौसपिंडनात्पूर्वंकृतान्यपिवृद्धिंविनापकर्षेपुनः स्व
कालेकार्याणि यस्यसंवत्सरादर्वाक्सपिंडीकरणंकृतम् मासिकंचोदकुंभंचदेयंतस्यापिवत्सरमितिमदनरत्नेगिरसोक्तेः
नचेदंमासिकानामपकर्षंविधत्ते किंतुसपिंडनोर्ध्वंस्वकालेनुष्ठानमेवेतिवाच्यम् श्राद्धानिषोडशादत्वानतुकुर्यात्सपिंडनामि
तिविरोधात् यस्यसंवत्सरादर्वाग्विहितातुसपिंडता विधिवत्तानिकुर्वीतपुनःश्राद्धानिषोडशेतिमाधवीयेगोभिलोक्तेश्च अ
र्वाक्संवत्सराद्यस्यसपिंडीकरणंकृतम् षोडशानांद्विरावृत्तिंकुर्यादित्याहगौतमइतितत्रैवगालवोक्तेः षोडशत्वंचैकाद
सपिंडनपक्षे तत्राद्यमासिकस्यकालसत्वात् अन्यपक्षेपुयथासंभवंज्ञेयम् यत्तुदीपिकायाम् अनुमासिकानितुचरेत्तान्ये
वसापिंड्यतःपश्चात् द्वादशोक्तेकृतानांनपुनःकृतिरित्युक्तम् तदेतद्विरोधाच्चिंत्यम् यत्तुगौडाः सपिंडीकरणांतातुज्ञे
याभेतक्रियाबुधैरितिशातातपोक्तेर्मासिकानांप्रेतत्वविमोक्षार्थत्वात्सपिंडनापकर्षेतदंतन्यायेनतेषामप्यपकर्षान्मासिका
नांनपुनःकृतिः यत्तुमासिकंचोदकुंभंचेतिलौगाक्ष्यादिवचनंतन्निर्मूलम् समूलत्वेपिदर्शपरंचेत्याहुः तेउक्तवक्ष्यमाण

वचोनिबंधविरोधान्मूलार्द्इत्यपेक्ष्यः यत्तुमिताक्षरायांसपिंडनोर्ध्वस्वकालेएवकार्याणि अपकर्षस्त्वनुकल्पइत्युक्तम् तदपि
पूर्वविरोधाच्चिंत्यम् तेनवृद्धिंविनापकर्षेपुनःकृतिः अर्वाक्संवत्सराद्यस्यसपिंडीकरणंभवेत् प्रेतत्वादिहतस्यापिज्ञेयंसंव
त्सरंनृपेत्यग्निपुराणात् वृद्धिनिमित्तापकर्षेत्वस्त्येवतान्निवृत्तिः अन्यथावृद्ध्यसंभवादितिशूलपाणिः कार्ष्णाजिनिः सपिंडी
करणादर्वागपकृष्यकृतान्यपि पुनरप्यपकृष्यंतेवृद्ध्युत्तरनिषेधनात् निषेधंचाहकात्यायनः निर्वर्त्यवृद्धितंत्रंतुमासिकानि
नतंत्रयेत् यथातथासंभरणंनभवेत्पुनरस्यतीति ह्रिस्वुधानंचोत्तरेषामेवनपूर्वेषांस्वस्वकालकृतानाम् तदाहमाधवीयेका
र्ष्णाजिनिः अर्वागब्दाद्यत्रयत्रसपिंडीकरणंकृतम् तदूर्ध्वमासिकानांस्याद्यथाकालमनुष्ठितिः हेमाद्रौशाट्यायनिः प्रेतश्रा
द्धानिशिष्टानिसपिंडीकरणंतथा अपकृष्यापिकुर्वीतकर्तुंनांदीमुखंद्विजः वृद्धिंविनापकर्षेदोषमाहोशनाः वृद्धिश्राद्धवि
हीनस्तुप्रेतश्राद्धानियश्चरेत् सश्राद्धीनरकेघोरेपितृभिःसहमज्जतीति आधानेपकर्षमाहहेमाद्रावुशनाः पितुःसपिंडीकर
णंवार्षिकेमृतिवासरे आधानादुपसंप्राप्तावेतत्प्रागपिवत्सरात् विशेषस्तूक्तोविवाहनिर्णये कण्वः नवश्राद्धंमासिकंचय
दंतरितंभवेत् तत्तदुत्तरसात्कृत्यादनुष्ठेयंप्रचक्षते गारुडेपि आपदाद्यकृतंयत्तुकुर्यादूर्ध्वमृताहनि अथसपिंडीकरणम्
माधवीयेहारीतः यात्तुपूर्वममावास्यामृताहाद्दशमीभवेत् सपिंडीकरणंतस्यांकुर्यादेवंकृतोग्निमान् मृताहादूर्ध्वंदशमी-
एकादशीत्यर्थः सपिंडीकरणंकुर्यात्पूर्ववच्चाग्निमान्कृतः परतोदशरात्राच्चेत्कुर्वन्ब्देपरेतरइतिकार्ष्णाजिनिस्मृतेः आ-
हिताग्नेस्तेनविनाश्रौतपिंडपितृयज्ञासिद्धेः तदाहगालवः सपिंडीकरणात्प्रेतेपैतृकंपदमास्थिते आहिताग्नेःसिनीवा-
ल्यांपितृयज्ञःप्रवर्तते मदनरत्नेप्रजापतिः नासपिंड्याग्निमान्पुत्रःपितृयज्ञंसमाचरेत् अपरार्केकात्यायनः एकादशा

